अवर्णि

अवर्णिन्यनुक्तं समोप्यातिरिक्तम्
परित्यज्य दुष्कीर्तितं चाभिवीक्ष्य
ककारादिवर्णक्रमेणाहमेतत्
सुवृत्तिं करिष्यामि विस्पष्टवाच्याम् ७०
ओदेदवर्णं सछन्नं संहितायां पदादिगम्
अवर्णं ज्ञातुमस्माभिरिदं शास्त्रं प्रणीयते ७१
आगाद्भूतमभरच्च असदत्पादमेव च
अग्निमतनो अप्राद्य आयं गौः पृश्निरक्रमीत् ७२
आरोहन्नागमन्नरुहाम् नेत्रारुहरीक्षणम्
असदर्नेत्रान्तरीक्ष्या विशदग्ने जति स्मृतम् ७३
अथ चावर्णिसूत्राण्येकविंशतिरेव च
एकस्य चैकरीत्या च ऋत्विक् संख्या तथेरिता ७४
एकस्य द्वितयत्वेन मूर्तिसंख्या तथेरिता
वेदसंख्याकसूत्राणामेकमेव हि निश्चितम् ७५
भूतसंख्याकसूत्राणामेकमेवं प्रकीर्तितम्
आहत्योदाहृतिः प्रोक्ता गयसंख्यासमेन तु ७६
तेऽग्न इत्था नरोऽग्निः सुयशोऽग्ने भानवेऽर्चे दे
वचोऽग्नये तु वोचेऽरि त्वायवोऽभि वसोऽभि तु ७७
सतोऽरुणप्सुर्नोनुमोऽदु पाशिनो नवेऽसि च

विपश्चितोऽभिवृधेऽस्मान् जूतिर्नो ह्योऽपीपेम तु ७८
क्षपमाणो अंशुना नरोऽपीप्यन् महेवसे शची
जायमानोऽशत्रु यथा नोऽविता जग्मयेऽत्रिणः ७९
इन्द्र तेऽस्ति मन्यवेहन्निन्दवेऽश्वपते नोऽविशत्
अपोऽर्चन्नद्रिवोऽनुत्तं भरन्तोऽवस्यवस्तथा ८०
आशवोऽस्तं दधोऽस्माँ इ विपश्चितो नृतोऽप इ
द्युमत्तमोऽभि मृधोऽप सातमोऽभ्यभवोंऽगिरः ८१
मर्जयन्तोऽछ गर्भोऽवृण्योजोऽजनेन्दवोऽस्मभि
अरातयोऽर्यरिन्दवोऽसिष्यदन्त सुतोऽव्य च ८२
षु नोऽव सह यशोऽथ ते मन्वसा सदोऽह तु
पादोऽस्येह विमानोऽज पादोऽस्य साद्रिवोंऽशु च ८३
तुभेरश्वा शिशुगर्भोऽग्नि द्वौ तमोऽवे रजोऽप तु
सृणीकोऽग्नि नमोऽस्यद्भ्यर्नमोऽन्नाय नमोऽन्नप ८४
वर्चोऽसि मनोऽसि मनोऽजयदिन्द्रोऽजयत्तथा
प्राणोऽपानर्यशोक्रान् च इन्दवोऽस्तं वृषायते ८५
मधुना पयोऽथ ऊर्मयोऽभिक्षरं गवेभ्य तु
अपोऽग्रियः पदेर्चंतो चतुरोऽस्मभ्यमुक्थिनः ८६
वनामहेऽति सेतुं धिया हितोऽभ्यद्रुहोऽपि तु
इन्दोऽस्मभ्यं श्रियोऽग्नि देववीतयेऽव्याश्चुतोऽसृमि ८७
विद्युतोऽग्नेरिमेऽभिस्तो र सेन्य वहतोऽप्रति

साधनोऽयं धियोऽग्ने तु स्तुभोऽभि धेनवस्तथा ८८
इन्दवोऽभि वत्सं विचक्षणो व्यार्यसेऽवि च
वृष्णोऽग्ने गोमतोऽपावरभिष्टुतोऽपकृतोऽतिराम् ८९
नीयतेऽन्तरथोऽव्या रसोऽव चष्टे शुभायते
इषितोऽभि पुनानोऽविभिर्नोऽजस्रया केतवः ९०
गृणानोऽभि सु नोऽपां शर्धतोऽभिशोदितेऽनागाः
इदन्धसो स्वतवसेऽरुणाय अपोऽति शूर त ९१
मा शिवासोऽव धीयते सृजिरेऽरुषीरधि
वाजेषु नोऽव मीढुषोऽनाधृष्टाभिः समिध्यते ९२
वृणीमहे ईमहे अग्निमायवोऽनुष्टुवन्ति पू
ऊतयेऽस्मिन् युयोधि नोऽदेवा वृष्ण्यंशवोऽस्म तु ९३
गविष्टयेऽग्ने गायन्तोऽवसोऽस्मानाहुवेऽग्नि तु
पित्वेऽवस वाहनोऽग्ने गावोऽरुषीररातयो ९४
अवासृजो वीरुधोऽन्तः कामयन्ते गृहेऽमृतम्
संक्रन्दनो नि स्वोऽरणः गाहमानोऽदयस्तथा ९५
युध्योऽस्माकं बाहवोऽनाशीर्षाणोऽहय वै बुधाः
मर्मृजानोऽविभि षोऽछावाजं नैतश स्मृतः ९६
अथ चावर्णिसूत्राणि कुभुवासंख्यया स्फुटम्
एकस्य चैकरीत्या च यमला संख्यया स्फुटम् ९७
एकस्य द्वितयत्वेन एकसंख्या तथेरिता

आहत्योदाहृतिः प्रोक्ता यवमो संख्यका स्फुटम् ९८
उप त्वाग्ने विजावाग्ने साते सुम पुराश्वहया
पूषा भुवद् विश्वथातन स्थूणाँसत्र चैव हि ९९
अतः पर गछन्न त्वाद्रिषः महित्वाद्या ममार
शुक्रस्य त्वाभि माप स्था माययावधीरर्च तु १००
मघवन्मातथा विश्वाभि धा रुचाभि गा इहि
जनिताग्नेर्धारयापो ऋतावापोर्मिणाव्य तु १०१
एव माव च मध्वा हि गन्तासि रोचनास्य तु
वृत्वात्यतिष्ठत् सं त्वा नोनवुर्मूर्धाभवाद्दिवः १०२
श्रद्धया श्रद्धचारिण्यः समो चाभि च दक्षिणा
प्रतिष्ठासि विपानया चाग्निनाग्निः समिध्यते १०३
इन्द्र त्वास्मिन्मावराणि न किष्ट्वानु म ओजसा
रूपाभ्यर्षसि दस्युहाभवर्वृत्रहणापरा १०४
यस्य वार्यम येवाद रोजसाभि रनूषता
धर्तासि चित्वाप्सु मदा वृत्रहाज सखाश्ववत् १०५
हिरण्याभि वृत्रहावधीन्मा शिवासोवक्रमुः
युधाभवन्मधुनाभि भुवनाभि सदासरः १०६
विभक्तासि व त्मनाग्निं सेनयाग्ने तवोत्या
बृहतासिक्नी नमसावटमुच्च तु १०७
मही न धारा ऊत्याभि प्र राजाप्यस्तविष्यते

सजित्वानापरा चित्रारुषी उत सखाश्विनोः १०८
दिवाभिपित्वेऽवसागमिष्ठाः प्रास्तासि शत्रवे
पितासि नस्तमसापव्रते पद्यस्व मामीषाम् १०९
रक्षोहामित्रान् राजामृतेनानु व यथासथ
जयन्तं त्वानु देवा मदोक्तो ह्रस्वस्य संग्रहः ११०
इति ह्रस्वसंग्रहणं समाप्तम्

अथ चावर्णिसूत्राणि सवसंख्या समीरिता
एकस्य चैकरीत्या च सवसंख्यास्तथेरिताः १११
आहत्य त्वत्र सूत्राणि रलघे संख्यका स्फुटम्
अतः परं पादादौ वर्तमानस्या वर्णः संगृह्यते ११२
वीरयाशव ये त्वारभ्य यथाजौ वृषाविश
ज्योतिषावीच्च युज्यावृणीमहे त्वावसो गमी ११३
मारे अस्मन् मश्विना त विश्वायुश्च इषायुषा
सातये पुरन्ध्या विवासैष वर्णिः सुनिर्मितः ११४
ऊत्यागमच्च पूर्वागाच्छ्वेत्यागा सवना गहि ११५
अथ चावर्णिसूत्राणि तिथिसंख्या समीरिता
एकस्य चैकरीत्या च पक्षसंख्यास्तथेरिताः ११६
आकारान्तं स्वरितान्तमाङ्परं यत्र दृश्यते
ऊत्यागमच्च पूर्वागा पुरन्ध्याव्यश्विनातता ११७

वृषाविशत श्वेत्यागाद्युज्यावृणीमहे
आकारादाङ्परश्चेत्स्यादकारस्तु परो भवेत्
पूर्वागादिति वै ज्ञेयं श्वेत्यागादिति च द्वयम् ११८
अवर्णि समाप्तम्